THE

PRINCESS OF WALES

# SARASWATI BHAVANA TEXTS

*No. 28*

( Monograph No 2. )

—o—

EDITED BY

GOPĪ NĀTHA KAVIRĀJA

---

THE

# VRATA-KOS'A

( **Part I** )





*Printed by Jai Krishna Das Gupta*
*At the Vidya Vilas Press, Gopal Mandir Lane,*
*Benares City.*

1929



॥ श्रीः ॥

# व्रतकोशः

## प्रथमो भागः

( अभिनवनिबन्धमालाया द्वितीयपुष्पम् )

साहित्योपाध्यायपदवीजुषा
होशिङ्ग-इत्युपाह्व-जगन्नाथशास्त्रिणा
सङ्गृहीतः ।




THE

# VRATA-KOS'A

BY

Jagannātha S'āstrī Hosiṅga, Sāhityopādhyāya,
Late Sādholāl Research Scholar,
Govt. Sanskrit College, Benares.



With a Foreword by
S'rī Gopīnātha Kavirāja, M. A.,
Principal, Govt. Sanskrit College, Benares.



1929

# INDEX TO THE CONTENTS.

# FOREWORD.

The study of a nation's Culture has different aspects and phases, each of which has to be approached from a different angle of vision and along a different line. The political history of a particular nation represents only a fraction, however important and significant, of its cultural history. It has of necessity to be supplemented by accounts which are of the nature of social, religious, moral and spiritual history. Of these the social history is undoubtedly, as bearing upon a wide range of questions, the most interesting. But so far as India is concerned, such a historical study has not yet been made, nor even undertaken. Before it is possible to take in hand a comprehensive history of this kind it is necessary to collect the data relating to the multiple questions of interest, which concern the social life of the country. Indian society, unlike other societies in the world, has been modelled more or less on a religio-civic basis. This fact has to be carefully kept in view when a social study of the country has to be attempted.

The following pages represent certain important details connected with the socio-religious institutions

of ancient and mediaeval India. It is a compilation, made from some of the most important sources*, of the various rites, ceremonies and festivities observed by the Hindu society during the year. As these rites fall upon different days of the year, generally lunar, it has been considered proper to arrange the data available on the subject in a certain regular order, beginning with the first day of the year and ending with its last.

Books on this subject are necessarily very rare, and excluding three or four hand books† which donot

---

* The works, mostly original texts, on which the present compilation is based are:—

( a ) Chaturvargachintāmaṇi by Hemādri. ( Calcutta )

( b ) Smṛtikaustubha by Ananta Deva. ( Bombay )

( c ) Puruṣārthachintāmaṇi by Viṣṇu Bhaṭṭa. ( Bombay )

( d ) Tithitattva ( from Smṛtitattva ) by Raghunandana Bhaṭṭāchāryya. ( Calcutta )

( e ) Kālasāra or Gadādhara paddhati by Gadādhara Rājaguru. ( Calcutta )

( f ) Kṛtyasārasamuchchaya by Amṛtanātha. ( Bombay )

( g ) Nīlamatapurāṇam. ( Lahore )

( h ) Amādor Jyautiṣī O Jyautiṣa by Yoges'achandra Rāya. ( Calcutta )

† ( 1 ) Hindu Religious Year, by Underhill; ( 2 ) History of Benares, by Sherring; and ( 3 ) Hindu Holidays and Ceremonials, by B. A. Gupta.

claim to be either exhaustive or based on Sanskrit texts, none is practically in existence.

Pandit Jagannath S'âstri Hoshing, to whom the task of bringing together notes connected with this subject was entrusted, has spared no pains in discharging his duty as satisfactorily as he could manage under the circumstances. The notes are by no means exhaustive: for the Epics and the Purāṇas have not yet been touched upon. But the author is anxious to pursue his subject further in subsequent parts, to follow in due course, wherein he would try to tap all the available sources including manuscripts.

It is hoped the volume just presented to the public will serve, even in its present form, as a useful Concordance to the subject in question.

Government Sanskrit College,
Benares.

*Gopinath Kaviraj*

॥ श्रीः ॥

# व्रतकोशस्य भूमिका ।

## उपक्रमः ।



व्रतम् एष शब्दः किल भारते वर्षे सुतरां प्रसिद्धिमुपयातः परमप्राचीनात् समयतश्चाऽत्र विपश्चिदपश्चिमैर्यत्र तत्र प्रयुज्यमानोऽद्यावधि निर्बाधं सर्वत्र प्रचलितव्यवहारो दृश्यते । अतो विषयेऽमुष्मिन् विशेषेण लेखनस्य नाऽस्त्यावश्यकत्वं, तथापि शब्दस्यैतस्य स्थले स्थलेऽनेकेऽर्थाः समुपलभ्यन्त इत्यतो हेतोर्यदि किञ्चिदत्र विलिख्येत; तर्हि तदप्रासङ्गिकं न स्यादिति मन्ये । अथच साम्प्रतं '**व्रतकोशः**' इत्याख्यं सङ्ग्रहरूपं पुस्तकं प्रकाश्य विदुषां पुरस्तादुपायनीक्रियते यदा, तदा तु प्रस्तावनायां परिचयाऽवसरे व्रतशब्दमीमांसनं प्रयोगमनुसृत्य तदर्थभेदप्रदर्शनं च न केवलं प्रासङ्गिकमेव भवेत्, अपितु नितरामावश्यकमपि प्रतीयेत ।

## व्रतशब्दस्य सिद्धिः ।

अस्तु, पूर्वं तावदिदमालोच्यते यदमुष्य शब्दस्य कीदृशी व्युत्पत्तिरिति । तत्र 'व्रियते' इति करणव्युत्पत्त्या 'वृञ् वरणे' इत्यस्माद् 'वृङ् सम्भक्तौ' इत्यस्माद्वा धातोर्बाहुलकात् कित्यतचि कित्त्वाद् गुणाभावे यणि 'व्रत'शब्दः सिद्ध्यति । अन्ये तु 'व्रजन्त्यनेन स्वर्ग'मिति

व्युत्पत्तिमङ्गीकृत्य गत्यर्थाद् 'व्रज'धातोः 'गोचरसञ्चर-' इत्यादिशास्त्रेण घप्रत्यये पृषोदरादित्वात् जकारस्थाने तकारादेशेन साधयन्ति शब्दमिमम् ।

## व्रतशब्दस्याऽर्थविचारः ।

इत्थं च पूर्वोक्तप्रकारद्वयेनाऽपि शब्दसाधुत्वस्वीकारे न काऽप्यनुपपत्तिरुत्पद्यते । तथाहि-प्रथमेन व्युत्पत्तिप्रकारेण 'वरणं, स्वीकारः, पालनं वा' इत्येवंविधोऽर्थबोधो भवति, तथैव 'कर्तव्य,माचरण'मिति प्रकारकोऽप्यर्थः स्पष्टमवगन्तुं शक्यते । द्वितीयया तु व्युत्पत्तिविधया 'पुण्योत्पादकं, स्वर्गप्राप्तिसाधक'मित्येवंरूपेण सम्भवन्त्यर्थाः । **उणादिकोशे** तु—'भक्षण,मशन'मिति व्रतशब्दस्याऽर्थौ निरूपितोऽस्ति । सामान्यतो विचारे क्रियमाणे व्रतशब्दस्य 'नियमः, पुण्यजनकमुपोषणादि, मधुमांसवर्जनादिनियमः, नियमग्रहणं, नियमपालनं, शास्त्रचोदितनियमाऽनुष्ठानम्'-इत्यादयः प्रतीतिविषयतामायान्त्यर्थाः । **नारायणोपाध्याय**स्तु-'दीर्घकालानुपालनीयसङ्कल्पो व्रत'मित्याह । **श्रीदत्तहरिनाथवर्द्धमाना**दयस्तु—'स्वकर्तव्यविषयो नियतः सङ्कल्पो व्रत'मित्यभिदधिरे । 'नियमरूपा धर्मा अपि व्रताः' इति **मनूक्तेः** स्वरसात् एकादश्युपवासैकभक्तादिष्वपि व्रतत्वाभिधानान्न सङ्कल्पो व्रतं, किन्तु सङ्कल्पविषयतत्तत्कर्मैव तत् । अत एवाऽस्य सङ्कल्पसम्भवत्वमपि । **न्यायकोशे**ऽपि-'सम्यक्सङ्कल्पजनिताऽनुष्ठेय क्रियाविशेषरूपं व्रतम् । तच्च प्रवृत्तिनिवृत्त्युभयरूपम् । तथाच

**भविष्यपुराणम्**—"सम्यक्संसाधनं कर्म कर्तव्यमधिकारिणा । निष्कामेण महावीर ! काम्यं कामान्वितेन च ॥" इति । तत्र द्रव्य-विशेषभोजनपूजनादिकं प्रवृत्तिरूपम् । उपवासादिकं च निवृत्तिरूपम् । तच्च नित्यनैमित्तिककाम्यभेदात्त्रिविधम् । तत्र नित्यमेकादश्यादिव्रतम् । नैमित्तिकं चान्द्रायणादिव्रतम् । काम्यं तत्तत्तिथ्युपवासादिरूपम्' इति प्रतिपादितं, तदस्माकमुपयोगीति विवेचयिष्यते ।

## अर्थविचारे प्रमाणान्तरम् ।

एवं च 'व्रतमेणाऽजिनादिधारणं, भोजनादिनियमो वाऽस्यास्तीति, व्रतयतीति वा 'व्रताद्भोजनतन्निवृत्त्यो'रिति णिच्प्रत्ययविशिष्टो णिनि प्रत्ययेन 'व्रते' इति **पाणिनि**सूत्रविहितेन सिद्धो व्रतिशब्दः साधकयजमानब्रह्मचारिचान्द्रायणादिव्रतकर्तृषु प्रयुज्यमानो बुधैरुपलभ्यते । उपनयन-संस्काराय 'व्रतबन्ध' इति, व्रतानां शास्त्रीयाणां नियमानां बन्धो बन्धनं यस्मिन् स इति व्युत्पत्तिबलेन प्रयुक्तः शब्दः 'शास्त्रीयनियमानामवश्य-मनुष्ठान'मित्यर्थं बोधयति । **याज्ञवल्क्ये**नाऽपि—'त्रिरात्रमा-व्रतात्' इत्यादिपङ्क्त्या व्रतशब्दस्य 'उपनयन'मित्यर्थ एव तत्र स्वीकृतिं नीतोऽस्ति ।

## ऋग्वेद आलोचनम् ।

अस्तु तावत्, इदानीमिदमालोचनीयं यत् प्राचीनतमसमयग्रन्थे-भ्यो नाम वेदेभ्य आरभ्याऽद्ययावत् समुपलभ्यमानेषु ग्रन्थेषु कुत्र कुत्र कस्मिन् कस्मिन्नर्थे क्रमशः कीदृशः प्रयोगोऽस्य शब्दस्येति तदर्थाऽनु-

सन्धानजिज्ञासया प्रवृत्तैरस्माभिः प्रथमम् 'ऋग्वेद'गताः प्रयोगाः **सायणाचार्यकृतभाष्यमवलम्ब्य** व्रतशब्दार्थप्रदर्शनपूर्वकं विचारपथमवतार्यन्ते ।

## ऋग्वेदे व्रतस्य कर्मार्थकत्वम् ।

पुरस्तात् प्रदर्श्यमानेषु मन्त्रेषु व्रतशब्दस्य 'कर्म' ( क्रिया= अनुष्ठानम् ) इत्येक एवैषोऽर्थः प्रत्यक्षमुपलभ्यते । मन्त्रास्तावत्—

***तव व्रते कवयो विद्म नापसः १, ३१, १., कविर्देवानां परि भूषसि व्रतम् १, ३१, २., तस्य व्रतं रक्षतम् १, ९३, ८., यस्येन्द्रस्य सिन्धवः सश्चति व्रतम् १, १०१, ३., तमर्यमाभि रक्षत्यृजूयन्तमनुव्रतम् । उक्थैर्य एनोः परि भूषति व्रतं स्तोमैराभूषति व्रतम् १, १३६, ५., अर्वन्नसि त्रितो गुह्येन व्रतेन १, १६३, ३., अनु व्रतानि वर्तते हविष्मान् १, १८३, ३., यस्य व्रतं न मीयते २, ८, ३., त्रीणि व्रता विदथे अन्तरेषाम् २, २७, ८., अविष्यामनुव्रतं सवितुर्मोक्यागात् २, ३८, ३., तानि व्रता देवस्य सवितुर्मिनन्ति २, ३८, ७., तस्य व्रतानि भूरि पोषिणः ३, ३, ९., व्रता ते अग्ने महतो महानि ३, ६, ५., आदित्यस्य व्रतमुपक्षियन्तः ३, ५९, ३., व्रता देवानां मनुषश्च धर्मभिः ३, ६०, ६., अनुव्रतं वरुणो यन्ति मित्रः ४, १३, २., व्रतानि देवः सविताभि रक्षते ४, ५३, ४., व्रते ता नो देवीः**

---

* ऋग्वेदमन्त्राणां पुरस्तात् प्रदर्शिता अङ्काः क्रमशो मण्डलसूक्तर्चां बोधकाः सर्वत्र सन्तीति ज्ञेयम् ।

सुहवाः शर्म यच्छत ५, ४६, ७., विपश्चिता व्रता रक्षेथे असुरस्य मायया ५, ६३, ७., व्रतानि मित्रावरुणा ध्रुवाणि ५, ६९, ४., यस्य व्रत ओषधीर्विश्वरूपाः ५, ८३, ५., पूषन्तव व्रते वयम् ६, ५४, ९., व्रतानि पूर्व्या महानि ७, ६, २., शन्नो अदितिर्भवतु व्रतेभिः ७, ३५, ९., जनयन्तो दैव्यानि व्रतानि ७, ७५, ३., व्रतान्यन्यो अभिरक्षते सदा ७, ८३, ९., विश्वेत्तानि वरुणस्य व्रतानि ८, ४२, १., यस्मिन् व्रतान्यादधुः ८, ९२, १., यद्वो वयं प्रमिनाम व्रतानि १०, २, ४., वयं सोम व्रते तव मनस्तनूषु बिभ्रतः १०, ५७, ६., द्यावापृथिवी जनयन्नभि व्रताप ओषधीर्वनिनानि यज्ञिया १०, ६६, ९., व्रता मिनादङ्गिरोभिर्गृणानः १०, १११, ४., आ वश्चित्तमा वो व्रतमा वोऽहं समितिं ददे १०, १६६, ४. इत्यादि ।

## ऋग्वेदे सविशेषणकर्मार्थकत्वं व्रतशब्दस्य ।

इतः परं तान् मन्त्रान् प्रदर्शयिष्यामो, येषु व्रतशब्दस्य 'यत्किञ्चिद्विशेषणविशिष्टं कर्म'त्येष एवाऽर्थः प्रकाशितो **भाष्यकारैः** । प्रतिमन्त्रमन्ते कोष्ठके व्रतशब्दबोध्योऽर्थोऽपि पाठकानां सौकर्याय विन्यस्यते । मन्त्रास्तावत्—तस्य व्रतान्युश्मसि १, २२, ६. ( सोमयागादिरूपाणि कर्माणि ), यतो व्रतानि पस्पशे १, २२, १९. ( अग्निहोत्रादीनि कर्माणि ), अदब्धानि वरुणस्य व्रतानि १, २४, १०. ( नक्षत्रदर्शनादिरूपाणि कर्माणि ), ऋतस्य देवा अनु व्रता

गुः १, ६५, ३. ( गमनाऽवस्थानशयनादिरूपाणि कर्माणि ), यस्य व्रते वरुणो यस्य सूर्यः १, १०१, ३. (नियमरूपे कर्माणि), एति प्रहोता व्रतमस्य १, १४४, १. ( हविःप्रदानादिरूपं कर्म ), तव व्रताय मतिभिर्जरामहे २, २३, ६. ( यज्ञाय ), अप्रच्युतानि दूळभव्रतानि २, २८, ८. ( विधरणानि कर्माणि ), आपश्चिदस्य व्रत आनिमृग्राः २, ३८, २. (प्रसवाख्ये), व्रतमर्यमा न मिनन्ति रुद्रः २, ३८, ९. ( प्रसवाख्यम् ), देवा देवानामनु हि व्रता गुः ३, ७, ७. ( यज्ञान् ), आहुरनुव्रतं व्रतमादीध्यानाः ३, ७, ८. ( यज्ञकर्मणि ), व्रते गन्धर्वाँ अपि वायुकेशान् ३, ३८, ६. ( यज्ञे ), परेषु या गुह्येषु व्रतेषु ३, ५४, ५. ( कर्मसु, अनुष्ठितेषु च ), यस्त आदित्य शिक्षति व्रतेन ३, ५९, २. ( यज्ञेन ), अनुव्रतं चरासि विश्ववारे ३, ६१, १. ( यज्ञकर्म ), व्रतेन स्थो ध्रुवक्षेमा ५, ७२, २. ( योगेन कर्मणा ), व्रतैः सीक्षन्तो अव्रतम् ६, १४, ३. ( यागैः ), वैश्वानर व्रतमग्नेसचन्त ७, ५, ४. ( प्रीतिकरं कर्म ), तस्य व्रतानि न मिनन्ति धीराः ७, ३१, ११. ( रक्षणादीनि ), ता इन्द्रस्य न मिनन्ति व्रतानि ७, ४७, ३. ( यज्ञादीनि ), पितैषां प्रत्नो अभिरक्षति व्रतम् ९, ७३, ३. ( प्रकाशनात्मकं कर्म ) उत व्रतानि सोम ते १०, २५, ३. ( यागादिकर्माणि ), न देवानामति व्रतम् १०, ३३, ९. (मर्यादालक्षणम् ), मित्रस्य व्रते वरुणस्य देवाः १०, ३६, १३. ( प्रसवाख्ये ), आर्या व्रता विसृजन्तो अधिक्षमि १०, ६५, ११.

( यागादीनि ), परेषु या गुह्येषु व्रतेषु १०, ११४, २. (कर्मसु यमनियमादिषु ). इत्यादि।

## शुक्लयजुर्वेदोक्तव्रतशब्दस्याऽर्थविचारः।

एतावदवधि **ऋग्वेदे** समागतानां मन्त्रमध्यपतितानां 'व्रत'-शब्दानामुदाहरणानि प्रदर्शितानि। अनन्तरमेतस्मादन्यत्राऽपि प्रयुक्ता व्रतशब्दा अर्थनिरीक्षणपुरस्सरमन्विष्यन्ते। तत्र **महीधरभाष्या-ऽनुसारेण शुक्लयजुर्वेदे** यथा—*अग्ने व्रतपते व्रतञ्चरिष्यामि तच्छकेयं तन्मे राध्यताम् १, ५. ( अनुष्ठेयस्य कर्मणः पते, कर्म ), व्रतं कृणुताऽग्निर्ब्रह्माग्निर्यज्ञो वनस्पतिर्यज्ञियः ४, ११. (क्षीरं= दीक्षितस्य भोजनाय यन्नियतं पयस्तद्व्रतमित्युच्यते), सं वां मनाᳬसि सं व्रता समु चित्तान्याकरम् १२, ५८. (कर्माणि), व्रतेन दीक्षा-माप्नोति दीक्षयाऽऽप्नोति दक्षिणाम् १९, ३०. (कर्मणा), अभ्या-दधामि समिधमग्ने व्रतपते त्वयि। व्रतं च श्रद्धां चोपैमीन्धे त्वा दीक्षितो अहम् २०, २४. ( कर्म ). इत्यादि।

## कृष्णयजुर्वेदोक्तव्रतशब्दस्याऽर्थविचारः।

एवं **सायणभाष्याऽनुसारं कृष्णयजुर्वेदीयतैत्तिरीय-संहितायाम्**—+नक्तमुप तिष्ठते न प्रातः स९ हि नक्तं व्रतानि

---

* वाजसनेयिसंहितान्तर्गतमन्त्राणां पुरः प्रदर्श्यमाना अङ्काः क्रमशोऽध्यायकण्डिकाबोधकाः सन्ति।

+ तैत्तिरीयसंहितामन्त्राणां पुरस्तात्प्रदत्ता अङ्काः क्रमेण काण्ड प्रपाठकाऽनुवाकऋचाप्रदर्शका बोध्याः।

सृज्यन्ते १, ८, ९, ५. ( अनुष्ठेयानि कर्माणि ), तस्यैतद्व्रतं नाऽनृतं वदेन्न माꣳसमश्नीयान्न स्त्रियमुपेयात् २, ९, ९, ६.( अनुष्ठानम् ), व्रतमेका रक्षति देवयूनाम् ४, ३, ११, ३. (कर्मानुष्ठानम्), पशवो वै वयस्था नानामनसः खलु वै पशवो नानाव्रतास्तेऽप एवाभि समनसः ५, ३, १, ३. ( भिन्नकर्माणः ), संवत्सरं न कं चन प्रत्यवरोहेन्न हीमे कं चन प्रत्यवरोहतस्तदेनयोर्व्रतम् ५, ७, ४, ३. ( नियमः ), वत्सस्यैकः स्तनो भागी हि सोऽथैकꣳ स्तनं व्रतमुपैत्यथ द्वावथ त्रीनथ चतुर एतद्वै क्षुरपवि नाम व्रतम् ६, २, ५, २.( कर्म ), चतुरोऽग्रे स्तनान्व्रतमुपैत्यथ त्रीनथ द्वावथैकमेतद्वै सुजघनं नाम व्रतम् ६, २, ५, ३. ( अनुष्ठानम् ), यवागू राजन्यस्य व्रतम् ६, २, ५, ४. ( कर्म ), यदस्य पयो व्रतं भवत्यात्मानमेव तद्वर्धयति ६, २, ५, ६. ( कर्म ), त्रिव्रतो वै मनुरासीद्द्विव्रता असुरा एकव्रता देवाः प्रातर्मध्यन्दिने सायं तन्मनोर्व्रतमासीत् ६, २, ५, ७. ( भोजनम् ), यदस्य मध्यन्दिने मध्यरात्रे व्रतं भवति ६, २, ५, ८. (अनुष्ठानम्). इत्यादि ।

## अथर्ववेदे व्रतशब्दस्याऽर्थविचारः ।

एवमेवाऽथर्ववेदे सायणभाष्यसहिते —×सं वां भगासो

× अत्र मन्त्राणामनन्तरं विन्यस्ता अङ्काः क्रमेण काण्डसूक्तऋचाबोधका ज्ञेयाः ।

अगमत सं चित्तानि समु व्रता २, ३०, २. ( कर्मनामैतत् ), सं वो मनांसि व्रता समाकूतीर्नमामसि ३, ८, ५. ( कर्म ), तेन गेष्म सुकृतस्य लोकं घर्मस्य व्रतेन तपसा यशस्यवः ४, ११, ६. ( कर्मणा ), द्वादश वा एता रात्रीर्व्रत्या आहुः प्रजापतेः। तत्रोप ब्रह्म यो वेद तद्वा अनडुहो व्रतम् ४, ११, ११. ( अनुष्ठेयं कर्म ), तव व्रते नि विशन्ते जनासस्त्वय्युदिते प्रेरते चित्रभानो ४, २५, ३. (कर्मणि), उतामृतासुर्व्रत एमि कृण्वन् ५, १, ७. ( कर्मणि ), समानो मन्त्रः समितिः समानी समानं व्रतं सह चित्तमेषाम् ६, ६४, २. ( कर्म ), सं वः पृच्यन्तां तन्वः१ सं मनांसि समु व्रता ६, ७४, १. ( कर्माणि ), यस्य व्रतं पशवो यन्ति सर्वे यस्य व्रत उपतिष्ठन्त आपः । यस्य व्रते पुष्टपतिर्निविष्टस्तं सरस्वन्तमवसे हुवामहे ७, ४१, १. (कर्म), सरस्वति व्रतेषु ते दिव्येषु देवि धामसु ७, ७०, १. ( कर्मसु ), व्रतेन त्वं व्रतपते समक्तो विश्वाहा सुमना दीदिहीह ७, ७८, ४. (कर्मणः, अनुष्ठीयमानेन दर्शपूर्णमासादिकर्मणा ), क्व व्रतं क्व श्रद्धास्य तिष्ठति कस्मिन्नङ्गे सत्यमस्य प्रतिष्ठितम् १०, ७, १. यत्र तपः पराक्रम्य व्रतं धारयत्युत्तरम् १०, ७, ११, अग्निहोत्रं च श्रद्धा च वषट्कारो व्रतं तपः ११, ९, ९. ('नानृतं वदे'दित्यादिशास्त्रविहितमाहिताग्नेः प्रातिस्विकमनृतवदनवर्जनादिरूपं कर्म, 'अहिंसा सत्यमस्तेयं शौचमिन्द्रियनिग्रहः'–इत्येवमादिरूपं वर्ज्यसाधारणं च व्रतशब्देन विवक्षितम् )—इत्यादयोऽन्येऽपि सन्ति प्रयोगाः।

## वेदसंहितोत्तरग्रन्थेषु व्रतशब्दस्याऽर्थविचारः ।

संहितोत्तरं तु **ऐतरेयतैत्तिरीयशतपथा**दिब्राह्मणग्रन्थेषु **आश्वलायनकात्यायनलाट्यायनशाङ्खायना**दिश्रौतसूत्रेषु **तैत्तिरीया**द्युपनिषत्सु **पारस्करगोभिला**दिगृह्यसूत्रेषु **आपस्तम्बा**दिधर्मसूत्रेषु **याज्ञवल्क्यमन्वा**दिस्मृतिषु **रामायणभागवतमहाभारताऽग्निमार्कण्डेया**दिपुराणेषु **अष्टाध्यायीपरिभाषेन्दुशेखरा**दिव्याकरणग्रन्थेषु **कथासरित्सागरहितोपदेशा**द्याख्यायिकासु **रघुवंशा**दिकाव्येषु **विक्रमोर्वश्या**दिनाटकेषु **वराहमिहिर**प्रणीत**बृहत्संहिता**दिज्यौतिषग्रन्थेषु च यथाऽवसरं तत्र तत्र व्रतशब्दप्रयोगा नैकदा दृग्गोचरतां व्रजन्ति । तत्र सर्वत्र प्रायः कर्माऽनुष्ठाननियमोपोषणभक्षणशास्त्रीयनियमप्रतिपालनरूपा एवाऽर्था विद्यन्ते । दिङ्मात्रमुदाह्रियते, **महाभारते**—पत्यौ भक्तिर्व्रतं स्त्रीणामद्रोहो मन्त्रिणां व्रतम् । प्रजानुपालनाऽनन्यकर्मता भूभृतां व्रतम् ॥ १३,१२७. **रामायणे**—यदिदं ते व्यवसितं परहिंसाकृतं व्रतम् । ३,१३,७. **मार्कण्डेयपुराणे**—अहं ते सम्प्रदास्यामि करं वैश्यव्रते स्थितः । ११६,३. **कथासरित्सागरे**—आलम्ब्य कुमुदव्रतम् । ७२,२८७. **रघुवंशे**—इत्थं व्रतं धारयतः प्रजार्थं समं महिष्या महनीयकीर्तेः । २,२५. **महावीरचरिते**—न त्वेवं दूषयिष्यामि शस्त्रग्रहमहाव्रतम् । ४,२२. **भोजराजकृतसमराङ्गणसूत्रधारे**-व्रतचर्याऽग्निकर्म च । ७,१८. उपोषणैर्व्रतैर्देहकर्शनं नियमैस्तथा । ७,२२. **अमरकोशे**-एकब्रह्मव्रताचाराः २,७,११. इत्यादि ।

## व्रतशब्दस्य निर्गलितोऽर्थः।

इत्थमेतावता प्रपञ्चेन यथोपलब्धि निरूपिता व्रतशब्दस्याऽर्थाः। सर्वेभ्यो ग्रन्थेभ्यो व्रतशब्दगर्भं वाक्यजातमुद्धृत्य तदर्थविचारकरणमफलेग्रहीति तदुपेक्ष्य प्रकृतमनुसरामः। सम्यक्सङ्कल्पजनिताऽनुष्ठेयक्रियाविशेषरूपमेवाऽत्र व्रतशब्देन विवक्षितम्। महाशिवरात्रिव्रते रात्रौ प्रतिप्रहरं शिवपूजा, जागरणम्, अहोरात्रमुपवास इत्यादि ग्रन्थोक्तदिशा स्वशक्त्युपचयादि निरीक्ष्य समनुष्ठीयते जनैरिति तथात्वं सिद्ध्यत्येवाऽस्य। एवं च कृतस्यैनसः शमनाय विधीयमानं चान्द्रायणाद्यपि तथात्वं भजति। समुचितेषु प्रायः सर्वेष्वेव व्रतेषु पूर्वोक्तलक्षणस्य समन्वयान्न लक्षणान्तरकल्पनाऽवश्यम्भाव इति स्पष्टं प्रतीयते। एतेन चाऽऽचरितेन मनोमालिन्यापोहद्वारा सत्संस्काराभ्युदयेन श्रेयःसाधनं भवतीति बाह्याऽऽन्तरस्वरूपेणाऽस्य सर्वथा सर्वदोपयोगित्वम्।

## व्रताङ्गत्वेन सामान्यतोऽत्र कालविचारः।

पूर्वोक्तदिशा व्रतशब्दस्य लक्षणाऽर्थस्वरूपाणि पर्यालोच्य 'वसन्ते ब्राह्मणोऽग्नीनादधीत' इत्यादिभिः श्रुतिभिरग्न्याधानादेर्वसन्तादिकालसापेक्ष्येण ग्रहणस्य समादेशात् क्रत्वर्थस्य वैदिकस्य व्रतस्य कालेन सह यथा सम्बन्धस्तथैव तदितरेषामपि व्रतानां समयविशेषमुद्दिश्यैव समनुष्ठानस्योक्तत्वादस्ति व्रतस्य कालेन सह सम्बन्ध इति कालविवेकोऽप्यावश्यक इव प्रतिभाति। यत्राऽऽस्माकी सर्वा क्रिया प्रवर्तते, येन

वा सह सकलमायुःप्रभृति निःशेषतां गच्छति, सोऽपरिच्छिन्नः समयादिपर्यायः कालः ।

## कालस्याऽवान्तरभेदाः ।

तस्याऽऽनन्त्याद्विभुत्वाच्च जपतपःप्रभृतीनां कार्याणामनुष्ठानाय परिच्छेदस्याऽऽवश्यकत्वेन सूर्याचन्द्रमसोर्गतिविशेषवशात् संवत्सराऽयनर्तुमासपक्षतिथिदिवसरात्रिप्रहरमुहूर्तादिरूपेण भेदमकल्पयन् ज्योतिर्विदः । वेदेष्वपि कालस्येमे भेदाः संज्ञाश्चोपलभ्यन्ते । षष्ट्युत्तरत्रिशत(३६०)दिनात्मकं कालं प्रतिपादयन् वर्षशब्दः **शतपथब्राह्मणे** (२,२,३.) समुपलभ्यते, तथाच तावान् तत्कल्पः (३५४)-दिवसात्मकः (३६५)दिवसात्मको वा कालः संवत्सरवाचकः । तदर्धं षण्मासा दक्षिणोत्तराख्यभेदद्वयवताऽयनपदेन व्यवह्रियते । अयने चैकस्मिन् ऋतुत्रयमन्तर्भवतीति द्विमास ऋतुरिति षण्णां वसन्तग्रीष्मवर्षाशरद्हेमन्तशिशिराणां संज्ञाऽजायत । ऋतोरेकस्याऽर्धं मासपदेनोच्यते, स च त्रिंशद्दिनात्मकः । तत्र पञ्चदशदिनानामेकः समूहः 'पक्षः' इति सङ्केतेन व्यवह्रियमाणः कृष्णशुक्लादिरूपां द्विविधामाख्याममावास्यापूर्णिमत्यान्तिमदिवसीयनामचिन्हेन सार्धं बिभर्ति । पक्षस्य पञ्चदशोंऽशस्तिथिरिति संज्ञया बोध्यमानः 'यां पर्यस्तमियादभ्युदियादिति सा तिथिः' ३२,१०. इति **ऐतरेयब्राह्मणे** प्रतिपादितेन लक्षणेन लक्षितो रश्मिमालिन उदयास्तमयः काल इत्यादि । गणनायां नर्मदाया दक्षिणे भागे प्रायः शालिवाहनशकवत्सर एव परिगृहीतो भवति, उत्तरे भागे तु

विक्रमवत्सरः संवत्–इत्याख्य एव प्रचलतीति नाऽविदितं विदुषाम् । प्रायः सर्वविधे व्यवहारे चान्द्रमास एव बुधैरङ्गीकृतो दृश्यते । स च पूर्णिमान्ताऽमान्तादिभेदेन द्विविधः पुराणेषु धर्मशास्त्रेषु च सर्वत्र प्रयुज्यमानोऽक्षिपथमुपयाति ।

## तिथिव्रतानामाधिक्यम् ।

एतावद्भेदवति काले व्रतस्य तिथिनैव सह प्राधान्येन सम्बन्धस्तत्र तत्र प्रतिपादित इति तिथिव्रतान्येव सर्वेभ्योऽधिकानि प्राप्यन्ते । तत्र तिथिषु प्राधान्योपलब्धेश्चान्द्रमानस्य हेतुत्वं कल्पयितुं शक्यते, चन्द्रमस एव कलाभिर्देवानां शरीरस्य तिथीनामपि सङ्घटनात्तिथिषु कृतानां व्रतानां तेनैव सम्बन्धाऽवगमात् । अहोरात्रव्रताऽऽश्विनव्रताऽग्नीषोमीय-व्रतदेवव्रतेत्यादीनां व्रतानां **लाट्यायनीये श्रौतसूत्रे**, ब्रह्मचारि-व्रतसावित्रव्रताऽऽग्नेयव्रतशुक्रियव्रतौपनिषदव्रतप्रभृतीनां व्रतानामवकीर्णि-( क्षतव्रत )प्रायश्चित्तस्य च **पारस्करीये गृह्यसूत्रे**, ब्रह्मचारि-व्रतगृहमेधिव्रतप्रमुखानां व्रताना**मापस्तम्बीये धर्मसूत्रे** च निर्देशा-त्तेषां च कालसापेक्ष्यात् काल एव यथावदुक्तस्याऽऽचरणेन विशिष्टफला वाप्तेरनुभवसिद्धत्वात् यथाकालं विहितेन कर्मणा व्रतादिना तावदभीष्ट-सिद्धिः । चन्द्रमस एव पार्थिवैः सह सन्निकृष्टसम्बन्धेन वर्तमानतया चतुर्थ्यादिव्रतेषु चन्द्रदर्शनस्यैव प्राधन्येन प्रतिपादनाच्च तिथिव्रताना-मेवाऽऽधिक्यं सर्वतो लब्धप्रचारं समुपलभ्यते ।

## व्रतानुष्ठानस्य प्राचीनत्वं, व्रतभेदाश्च ।

पुरातनात् समयादद्ययावत् कृते ग्रन्थानामवलोकने मनस्येतदुद्भवति यदयं व्रताचारप्रचारो बहुतिथात्कालात् प्रवर्तमानोऽनेकविधत्वमभजत् । तथाहि वेदेषु तावत्–अनुष्ठेयरूपेण व्रतस्य यागार्थप्रतिपादनात् तदनन्तरं ब्राह्मणोपनिषच्छ्रौतसूत्रेषु ब्रह्मचर्यादीनामुल्लेखाच्च तावद् व्रतस्य वैदिकत्वं, तन्त्रेष्वपि केषाञ्चन व्रतविशेषाणामभिहितत्वात् तान्त्रिकत्वं, धर्मशास्त्रसङ्गृहीतानां केषाञ्चिद्वैदिकत्वं तन्मूलकस्मृत्याद्याधारकत्वेन, परेषां पुनः पुराणाश्रयणात् पौराणिकत्वम्–इति व्रतानि तावत् भेदत्रयवन्ति वैदिकतान्त्रिकपौराणिकरूपाणि सन्तीति सामान्यतो निर्णयकरणे न काऽप्यनुपपत्तिरिति विमर्शनीयं प्रेक्षावद्भिः ।

## व्रतस्य व्यापकता ।

उपोषणरूपं शास्त्रीयनियमपालनरूपं वा व्रतं किं केवलं भारतीयानामेव विषयमाक्रामति, आहोस्विदन्येषामपीति व्रतव्यापकताविचारे पुरः समुपस्थिते न केवलं भारतीयेष्वेव, किन्तु सर्वत्र प्रायो जगत्यां केनाऽपि रूपेण निर्बाधमस्य प्रवेश इति प्रतिभाति । तथाहि यथाऽस्मद्देशिया नित्यमुपवासरूपं प्रतिमासं द्विरेकादशीव्रतमन्यानि च महाशिवरात्रिप्रभृतीनि कानिचिद्व्रतान्याचरन्ति, तथैव किञ्चिद्विकृतिमद्रूपेण मासमनुष्ठेयेन 'रोज़ा'ख्येन व्रतेन तत्प्रातिनिध्यं समनुतिष्ठन्ति यवना मोहम्मदीयाश्च । योरोपीयाणां मतेऽपि प्राचीनसमये बाहुल्येन व्रतप्रचार आसीत्, नास्त्यधुना तादृक्; परं केनापि रूपेण सन्तिष्ठत एव ।

एवमेव बौद्धादिधर्मानुयायिनामन्यदेशवासिनामपि धर्मे वृतं जागर्त्येवेति न विशेषविचाराऽवसरः । साम्प्रतमयमेको यवनव्रततुलनाप्रसङ्गेन 'वृतस्य चन्द्रमसैव घनिष्ठः सम्बन्धः, तेषामपि व्रतस्य चन्द्रदर्शनेनैव समाप्तेर्दर्शनात्' इति मनसि समागतस्तर्कः पूर्वोक्तामस्मदुक्तिं द्रढयति । एवं च प्रायः सार्वभौमिकी व्यापकता वर्तते वृतस्येति प्रतिपादनं दोषाय न स्यादित्यनुमातुं नाऽशक्यम् ।

## प्रकृतग्रन्थनिर्माणस्योद्देशः ।

पुरा कदाचन पुस्तकालये पुस्तकनिरीक्षणावसरे योरोपीयेनैकेन अण्डरहिल्( Underhill )नाम्ना पण्डितेन विरचितं 'भारतीयानां धार्मिको हायनः' ( Hindu Religious Year ) इति नामकं पुस्तकं, 'वाराणसीतिहासः' (History of Benares) इति नामकं च 'शेरिङ्ग'-( Shering )महोदयनिर्मितं वीक्ष्य तदुभयमपि न तथा परिपूर्णमित्यालोच्य तादृशग्रन्थसञ्जिग्राहयिषया पूर्वं वाराणसेयराजकीयसरस्वतीभवनसंस्कृतपुस्तकालयाध्यक्षाः साम्प्रतं काशिकराजकीयसंस्कृतविद्यालयप्रधानाध्यक्षाः सुगृहीतनामधेयाः एम्०ए०इत्यादिविरुदभाजः **श्रीगोपीनाथकविराज**शर्ममहोदया एतत्सम्पादनाय समादिशन् । ततश्च तत्प्रदर्शितमेव पन्थानमनुसृत्य कृतोऽयं मया सङ्ग्रहः । स च **'सरस्वतीभवनग्रन्थमाला'**यां प्रकाशनीय इति तैराज्ञप्तेन मया मुद्रणोपयोगितां नीत्वा मुद्रणाय प्रदत्त इति, तदैव **बी० ए०**-**गुप्ते**महोदयकृतो 'भारतीयानां पवित्रा दिवसा उत्सवाश्च' ( Hindu

Holidays and Ceremonials by B.A.Gupte) इत्यभिधानवान् ग्रन्थोऽपि तदीयकृपयैवाऽस्माकमक्षिविषयतां यातः, परमस्मत्सङ्ग्रहस्तदेपक्षयाऽपि परमं भेदमावहतीति कृत्वा तथैव संमुद्य स प्रकाशतां प्रापितः ।

## नामकरणं, प्रथमभागकल्पना च ।

सङ्ग्रहस्याऽस्य केनाऽपि नाम्ना नामकरणमावश्यकमिति साम्प्रतं प्रचलितायाः कोशपद्धत्याः किञ्चिद्रचनादिना साम्यं निरीक्ष्य व्रतानामयं कोश एवेति सुचिरं विचार्य '**व्रतकोशः**' इति तन्नामकरणं विहितम् । यानि ग्रन्थरत्नान्युपजीव्य प्रस्तुतनिर्माणं व्यधायि; तेषु च दाक्षिणात्यमैथिलोत्कलवङ्गगौडादिसर्वसाम्प्रदायिनां निबन्धा आहृताः सन्तीति तेषां ग्रन्थारम्भे मुद्रणस्थानादिः पूर्णः परिचयः प्रदत्त एव, किन्तु **व्रतराजव्रतार्कव्रतकौमुदीकामधेनुनिर्णयसिन्ध्वा**दीनां धर्मग्रन्थानां, पुराणानां, तन्त्रग्रन्थानां च समीक्षणमन्वेषणं च नाऽद्ययावज्जातमिति तस्याऽपूर्णतां मन्यमानेन मया प्रारम्भे 'प्रथमो भागः' इति सङ्केतितम् । पुस्तकमिदं बुधजनमनःसन्तोषकरं यदि स्यात्; तत्रभवान् भगवान् पुनरेतस्य पूरणाय तथाऽवकाशं साधनसामग्रीसाहित्यलाभं च दद्याद्यदि; तर्हि तत्पूरणं मयैव सम्भवि, अन्यथाऽन्येन केनाऽपि विधीयेत तदाऽपि समञ्जसमेव स्यात्, परं मया तु प्रायोऽशक्यमेव ।

## उपकृतिस्मरणम्, उपसंहारश्च ।

अत्र हि सर्वप्राधान्येन सर्वभावेन च मां प्रेरयन्तः साहाय्यमाचरन्त-

श्च सर्वदा स्नेहं मयि बिभ्रतो माननीयाः काशिकराजकीयप्रधान-संस्कृतपाठशालाध्यक्षाः **श्रीगोपीनाथकविराज एम्०ए०**महोदयाः कथङ्कारं नाम न स्मरणीया उल्लेखनीयाश्च, येषामेव कृपया पूर्णता मुपगतमिदं सङ्ग्रहणप्रकाशनादिरूपं कार्यजातमिति तान् ससंमानं हृदि निधाय, पुस्तकनामकरणप्रसङ्गे समुचितं साहाय्यं विदधतः काशी-सरस्वतीभवनपुस्तकालयप्रधानाध्यक्षान् **डा०मङ्गलदेवशास्त्रि-एम्० ए०, डि० फिल्०**महोदयान् धन्यवादैरनेकैः सभाजयित्वा, यैर्वृत्तिप्रवेश-प्रदान-समयाधिकदानादिभिः सुचिरमयमुपकृतस्तानपि कैलासवासि-परमगुरुवर-**महामहोपाध्याय-श्रीरामशास्त्रि-तैलङ्ग**पूज्यपादान्, प्रयागविश्वविद्यालयीयकुलपतिपदभाजो मान्यान् **महामहोपाध्याय-श्रीगङ्गानाथझा एम्०ए०, डि० लिट्०, एल्० एल्० डी०**महोदयान्, **रायबहादुर-कुमारमुनशी-**प्रभृतिविरुदावलीसमलङ्कृतान् '**साधोलालवृत्ति**'जनकानां **राजा-मुनशीश्रीमाधवलाल सी.आई.ई.** महोदयानामुत्तराधिकारिणो विनयसौजन्यादिगुणनिधीन् **श्रीनन्दलाल**महोदयांश्च कथमिव न स्मरेयमिति तेषां मुहुर्मुहुः स्मरणं कृत्वा, समुचितसूचनादिनैकविधसाहाय्य-सम्पादकानकृत्रिमप्रेमनिधीन् सतीर्थ्यान् काशीहिन्दूविश्वविद्यालयप्रतीच्य-विभागे संस्कृताध्यापकान् मित्रवर-**श्रीबटुकनाथशर्म एम्० ए०, साहित्योपाध्याय**महोदयान् सस्नेहमभिनन्द्य, पुस्तकप्रदानेन सुतरामुपकुर्वतः काशीस्थसरस्वतीभवनपुस्तकालयाध्यक्षान् परमसुहृदः **साहित्याचार्यान् खिस्तेश्रीनारायणशास्त्रिणः**, वाराणसेय-

राजकीयसंस्कृतविभागे आङ्ग्लभाषाध्यापकान् **साहित्योपाध्याय-श्रीगणपतिदेवशास्त्रिणः**, ज्योतिर्विदः सुहृद्वर्यान् **वेतालोपाह्व-श्रीश्रीनाथशास्त्रिणः**, **धर्माधिकारिकुलरत्नश्रीलक्ष्मीधर-पन्तांश्च** धन्यवादैरनेकैः संमान्य, चौखम्भासंस्कृतग्रन्थमालासम्पादकान् **श्रीजयकृष्णदासश्रेष्ठि**महोदयान् शुभाशीराशिभिरभिवर्द्धय्य, आङ्ग्लप्रस्तावनालेखने सहायतां सम्पादयतः स्वानुजान् **श्रीगणपत-राव होशिङ्ग बी० ए०, एल्० एल्० बी०**महाशयानपि सस्नेह-माशीःपरम्परया सम्भूष्य च भूमिकालेखनकार्यसमापनाय प्रयतमानः सर्वप्रथमं संस्मरणीयान् **महामहोपाध्याय**–गुरुवर–**श्रीलक्ष्मण-शास्त्रितैलङ्ग**पूज्यचरणान्, काशीस्थराजकीयसंस्कृतविद्यामन्दिरे साहित्यदर्शनप्रधानाध्यापकवर्यान् गुरुवर-**श्रीभालचन्द्रशास्त्रि-मानवल्ली**पूज्यपादांश्च सभक्त्युन्मेषमभिवन्द्य गुणैकपक्षपातिनो मान-नीयान् सहृदयान् मनीषिमहाभागान् दयादृष्टिवृष्टिप्रदानाय प्रार्थयमानो विरमामि वृथापल्लवितादमुष्मद्वाग्व्यापारप्रपञ्चादिति शिवम्।

| | |
|---|---|
| **वाराणसी,**<br>१९८५<br>वसन्तपञ्चमी। | विदुषामनुग्रहाकाङ्क्षी—<br>**जगन्नाथशास्त्री होशिङ्गः।** |

# शुद्धिपत्रम् ।

| अशुद्धम् | शुद्धम | पृष्ठम् | पङ्क्तिः |
| --- | --- | --- | --- |
| भार्तृप्राप्तिव्रतम् | भर्तृप्राप्तिव्रतम् | १७ | ४ |
| २८५ | ३८५ | ९६ | १ |
| ३८६* | द्विरावृत्तेयमत्र संख्या | ९६ | ५ |
| ०चन्द्रर्घ्यदानम् | ०चन्द्रार्घ्यदानम् | १४३ | १ |
| ७०३* | इयमपि द्विरावृत्तैव संख्या | १६० | ४ |
| षुरुषोत्तमयात्रा | पुरुषोत्तमयात्रा | १७७ | ६ |
| महानन्दासप्तमी | महानन्दानवमी | २०४ | १० |
| सूर्यसंक्रान्तै | सूर्यसंक्रान्तौ | २६७ | १ |
| कामत्रयोदशी व्रतम् | कामत्रयोदशीव्रतम् | २७३ | ७ |
| १४९५ | १४५९ | २९६ | २ |

* एतच्चिन्हितसंख्ययोर्द्विरावृत्ततया पुस्तके वर्तमानाऽन्तिमा संख्या १६२२ न वास्तविकी, किन्तु तत्र १६२४ क्रमाङ्कसंख्या वस्तुत उचितेति बोध्यम् ।

|| श्रीः ||

# व्रतकोशस्य व्रतानुक्रमणी ।

| पृष्ठाङ्कः | व्रतादीनि | क्रमाङ्कः |
|---|---|---|
| ३१९ | सङ्क्रान्तिस्नानव्रतम् | १५९७ |
| ३१९ | ,, ,, ,, | १५९९ |
| ३२० | ,, ,, ,, | १६०१ |
| ३२० | ,, ,, ,, | १६०५ |
| ३२० | ,, ,, ,, | १६०७ |
| २८१ | सङ्ग्रामविधिः | १३६५ |
| १४१ | सङ्काटकव्रतम् | ६०३ |
| २७६ | सदाव्रतम् | १२९८ |
| १५४ | सन्तानदव्रतम् | ६७५ |
| २३ | सन्तानाष्टमीव्रतम् | १०८ |
| ११५ | सप्तपितृकामावास्या | ४८८ |
| ८९ | सप्तपुरिकामावास्या | ३५७ |
| २६८ | सप्तमीलोकव्रतम् | १२४० |
| २६७ | सप्तमीस्नपनम् | १२२९ |
| १४४ | सप्तर्षिकृच्छ्रव्रतम्— (कृच्छ्रव्रतानि) | ६१६ |
| ७ | सप्तर्षिव्रतम् | २५ |
| २६८ | ,, ,, | १२३७ |
| २५१ | सप्तसप्तसप्तमीव्रतम् | ११०८ |
| ७ | सप्तसागरव्रतम् | २४ |
| २७९ | सप्तसुन्दरव्रतम् | १३४० |
| १८० | सफलैकादशी | ८१० |
| ६ | समुद्रव्रतम् | २१ |
| २७८ | सम्पूर्णव्रतम् | १३२७ |
| १९३ | सम्प्राप्तिद्वादशीव्रतम् | ८५४ |
| २६२ | सम्भोगव्रतम् | ११८१ |
| २६५ | ,, ,, ,, | १२०८ |
| १३८ | सरस्वतीपूजनम् | ५८६ |
| ९५ | सरस्वतीपूजा | ३८४ |
| १३८ | सरस्वतीविसर्जनम् | ५८८ |
| १३८ | सरस्वत्या आवाहनं स्थापनं च | ५८५ |
| १३८ | सरस्वत्यै बलिदानम् | ५८७ |
| २६८ | सरिद्व्रतम् | १२३४ |
| २६५ | सर्पपञ्चमीव्रतम् | ११९२ |
| ३०३ | सर्वकामप्रदव्रतम् | १५०८ |
| ३०३ | ,, ,, ,, | १५०९ |
| १८३ | सर्वकामव्रतम् | ८२४ |
| २१४ | ,, ,, ,, | ९४३ |
| २८७ | सर्वकामाप्तिव्रतम् | १४०१ |
| २८८ | ,, ,, ,, | १४०७ |
| २८९ | ,, ,, ,, | १४१६ |
| २९० | ,, ,, ,, | १४२५ |
| २९१ | ,, ,, ,, | १४२९ |

॥ इति ॥



॥ श्रीः ॥

# प्रमाणभूतपुस्तकपरिचयः ।

| संख्या | पुस्तकनाम | सङ्केतः | पृष्ठानि | संवत्सरः | मुद्रणस्थानम् |
|---|---|---|---|---|---|
| १ | स्मृतिकौस्तुभः अनन्तदेवकृतः । | स्मृ. कौ. | १–४२२ | सन् १९०९ | निर्णयसागरः, मोहमयी (Bombay) |
| २ | तिथितत्त्वम् (स्मृतितत्त्वान्तर्गतम्) रघुनन्दनभट्टाचार्यकृतम् । | ति. त. | १–१८८ | सन् १८९५ | कलिकाता (Calcutta) |
| ३ | चतुर्वर्गचिन्तामणिः | च. चिं. | | | |
| | हेमाद्रिकृतः । (व्रतखण्डः) | १ भागः | १–१२२२ | सन् १८७८ | कलिकाता (Bib. Ind.) |
| | | २ भागः | १–१०८८ | सन् १८७९ | ,, ,, ,, |

प्रमाणभूतपुस्तकपरिचयः ।

| संख्या | पुस्तकनाम | सङ्केतः | पृष्ठानि | संवत्सरः | मुद्रणस्थानम् |
|---|---|---|---|---|---|
| ४ | पुरुषार्थचिन्तामणिः विष्णुभट्टकृतः । | पु. चिं. | १-४७० | सन् १९०६ | नि० सा०, मोहमयी (Bombay) |
| ५ | गदाधरपद्धतिः गदाधरराजगुरुकृता । ( कालसारः ) | ग. प. | १-६१४ | सन् १९०४ | कलिकाता Bib. Ind.(Calcutta |
| ६ | कृत्यसारसमुच्चयः अमृतनाथकृतः । | कृ. स. | १-१११ | संवत् १९७२ | खेमराजः, मोहमयी (Bombay) |
| ७ | आमादेर ज्योतिषी ओ ज्योतिष योगेशचन्द्ररायकृत । | आ. ज्यो. १ भाग | ३१९-३२६ | सन् १९०३ | कलिकाता (Calcutta) |
| ८ | नीलमतपुराणम् | नी. पु. | १-१२९ | सन् १९२४ | लवपुरम् (Lahore) |



॥ श्रीः ॥

# चैत्रमासः

## शुक्लपक्षः

### १ प्रतिपत्

| क्रमाङ्कः | व्रताङ्कः | व्रतादिनामानि | प्रमाणग्रन्थतत्पृष्ठोल्लेखः | विशेषः |
|---|---|---|---|---|
| १ | १ | चान्द्रवत्सरारंभः | स्मृ. कौ. पृ. ३,<br>पु. चिं. पृ. ५६,<br>च. चिं. पृ. ३६०-३६५,<br>ग. प. पृ. ६६,<br>आ. ज्यो. पृ. ३२२. | चैत्रे मलमासे सति तत्रैव वर्षारम्भः कार्यः । |

| क्रमाङ्कः | व्रताङ्कः | व्रतादिनामानि | प्रमाणग्रन्थतत्पृष्ठोल्लेखः | विशेषः |
| --- | --- | --- | --- | --- |
| २ | २ | ब्रह्मपूजनम् | स्मृ. कौ. पृ. ३–४,<br>पु. चिं. पृ. ५६,<br>नी. पु. पृ. ५६. | दिनेऽस्मिन्नवश्यं तैलाभ्यङ्गो विधेयः। |
| ३ | ३ | वत्सराधिपपूजा | स्मृ. कौ. पृ. ६–६,<br>पु. चिं. पृ. ५५. | |
| ४ | ४ | कल्पादिः | स्मृ. कौ. पृ. ५–६,<br>आ. ज्यो. पृ. ३२२. | अत्र श्राद्धम्। |
| ५ | ५ | मत्स्यजयन्ती | स्मृ. कौ. पृ. ६–७. | |
| ६ | ६ | नवरात्रारम्भः | स्मृ. कौ. पृ. ७,<br>कृ. स. पृ. ३. | |
| ७ | ७ | गौरीव्रतम् | स्मृ. कौ. पृ. ७. | |
| ८ | ८ (१) | प्रपादानारम्भः | स्मृ. कौ. पृ. ७,<br>पु. चिं. पृ. ५७. | |

| क्रमाङ्कः | व्रताङ्कः | व्रतादिनामानि | प्रमाणग्रन्थतत्पृष्ठोल्लेखः | विशेषः |
| --- | --- | --- | --- | --- |
| | | (२) धर्मघटदानम् | पु. चिं. पृ. ५७–५८. | |
| ९ | ९ | विद्याव्रतं सोद्यापनम् | च. चिं. पृ ३४३. | वार्षिकम्। |
| १० | १० | पौरुषप्रतिपद्व्रतम् | च. चिं. पृ. ३४४. | ,, |
| ११ | ११ | तिलकव्रतम् | च. चिं. पृ ३४८–३५० | |
| १२ | १२ | ब्राह्मण्यप्राप्तिव्रतम् | च. चिं. पृ. ५००–५०१. | इदं चतुर्मूर्तिव्रतं प्रतिपदश्चतुर्थ्यन्तम्। अत्र क्रमशः इन्द्रयमवरुणकुबेराणां पूजा । |
| १३ | १३ | धनावाप्तिव्रतम् | च. चिं. पृ. ५०१–५०२. | इदं चतुर्मूर्तिव्रतमिव, अत्र विष्णुभूदेवपितामहानां पूजा । |
| १४ | १४ | सर्वाप्तिव्रतम् | च. चिं. पृ. ५०२–५०३. | पूर्ववत्, अत्र ज्ञानैश्वर्यशक्तीनां पूजा । |
| १५ | १५ | चतुर्युगव्रतम् | च. चिं. पृ. ५०३–५०४. | प्रतिपदश्चतुर्थ्यन्तं दिनचतुष्टयात्मकम् । |

| क्रमाङ्कः | व्रताङ्कः | व्रतादिनामानि | प्रमाणग्रन्थतत्पृष्ठोल्लेखः | विशेषः |
|---|---|---|---|---|
| १६ | १६ | देवमूर्तिव्रतम् | च. चिं. पृ. ५०४–५०५. | पूर्ववत्, स्नानं क्रमशः कूपनदीतडागकासारेषु, इदमपि चतुर्मूर्तिव्रतमुच्यते । |
| १७ | १७ | सर्वापच्छान्तिकर–महाशान्तिः | नी० पु० पृ. ५६–६२. | नववत्सरप्रथमदिने । |
| १८ | १८ | नदीव्रतम् | च. चिं. पृ. ४६२. | प्रतिमासं प्रतिपद आरभ्य सप्तमीपर्यन्तमेवं वर्षं यावत्, फाल्गुनशुक्लसप्तम्यामस्य समाप्तिः । |
| १९ | १९ | लोकव्रतम् | च. चिं. पृ. ४६३. | ,, ,, |
| २० | २० | शैलव्रतम् | च. चिं. पृ. ४६३–४६४. | ,, ,, |
| २१ | २१ | समुद्रव्रतम् | च. चिं. पृ. ४६४–४६५. | ,, ,, |
| २२ | २२ | द्वीपव्रतम् | च. चिं. पृ. ४६५–४६६. | ,, ,, |

| क्रमाङ्कः | व्रताङ्कः | व्रतादिनामानि | प्रमाणग्रन्थतत्पृष्ठोल्लेखः | विशेषः |
|---|---|---|---|---|
| २३ | २३ | पितृव्रतम् सप्तमूर्तिव्रतं वा | च. चिं. पृ. ५०५-५०६ | ,, ,, |
| २४ | २४ | सप्तसागरव्रतम् | च. चिं. पृ. ५०७. | ,, ,, |
| २५ | २५ | सप्तर्षिव्रतम् | च. चिं. पृ. ५०८. | ,, ,, |
| २६ | २६ | दमनकपूजा | च. चिं. पृ. ४५३–४५५ | पञ्चदशादिनात्मिका, अत्रारम्भः। |

(क) प्रतिपदि उमाशिवहुताशनानां दमनकेन पूजनम् ।
(ख) द्वितीयायां पितामहस्य ,,
(ग) तृतीयायां शङ्करसहिताया देव्या ,,
(घ) चतुर्थ्यां गणेशस्य ,,
(ङ) पञ्चम्यां नागानां ,,
(च) षष्ठ्यां स्कन्दस्य ,,
(छ) सप्तम्यां भास्करस्य ,,
(ज) अष्टम्यां मातॄणां ,,

| क्रमाङ्कः | व्रताङ्कः | व्रतादिनामानि | प्रमाणग्रन्थतत्पृष्ठोल्लेखः | | विशेषः |
|---|---|---|---|---|---|
| | | (झ) नवम्यां | महिषमर्दिन्या | ,, | |
| | | (ञ) दशम्यां | धर्मराजस्य | ,, | |
| | | (ट) एकादश्यां | मुनीनां | ,, | |
| | | (ठ) द्वादश्यां | विष्णोः | ,, | |
| | | (ड) त्रयोदश्यां | कामस्य | ,, | |
| | | (ढ) चतुर्दश्यां | शङ्करस्य | ,, | |
| | | (ण) पौर्णमास्यां | शच्या सहेन्द्रस्य | ,, | |



| क्रमाङ्कः | व्रताङ्कः | व्रतादिनामानि | प्रमाणग्रन्थतत्पृष्ठोल्लेखः | विशेषः |
|---|---|---|---|---|
| | | **२ द्वितीया** | | |
| २७ | १ | बालेन्दुव्रतम् | स्मृ. कौ. पृ. ७–८,<br>च. चिं. पृ. ३८०–३८१. | |
| २८ | २ | उमादिपूजा | स्मृ. कौ. पृ. ८,<br>पु. चिं. पृ. ८३. | दमनकेन । |
| २९ | ३ | प्रकृतिपुरुषद्वितीयाव्रतम् | च. चिं. पृ. ३९१–३९२. | |
| ३० | ४ | नेत्रद्वितीयाव्रतम् | च. चिं. पृ. ३९२–३९३. | |
| | | **३ तृतीया** | | |
| ३१ | १ | आन्दोलनव्रतम्<br>पार्वतीपरमेश्वरयोः | स्मृ. कौ. पृ. ८-९,<br>पु. चिं. पृ. ८५. | मुहूर्तमात्रापि तृतीया चतुर्थीयुता-<br>ग्राह्या न द्वितीयायुता । |
| ३२ | २ | रामचन्द्रदोलोत्सवः | स्मृ. कौ. पृ. ९. | |

| क्रमाङ्कः | व्रताङ्कः | व्रतादिनामानि | प्रमाणग्रन्थतत्पृष्ठोल्लेखः | विशेषः |
|---|---|---|---|---|
| ३३ | ३ | मन्वादिः | स्मृ. कौ. पृ. ९, आ. ज्यो. पृ. ३२२. | अपिण्डं श्राद्धं कार्यम्। |
| ३४ | ४ | उमापूजा | च. चिं. पृ. ३९५–३९९. | |
| ३५ | ५ | सौभाग्यशयनव्रतम् | च. चिं. पृ. ४४४–४४९. | आरम्भोऽत्र । |
| ३६ | ६ | (क) गौरीव्रतम् | च. चिं. पृ ४५०–४५२, | |
| | | (ख) गौरीतृतीया | आ. ज्यो. पृ. ३२२. | |
| ३७ | ७ | मत्स्यजयन्ती | आ. ज्यो. पृ. ३२२. | |

## ४ चतुर्थी

| क्रमाङ्कः | व्रताङ्कः | व्रतादिनामानि | प्रमाणग्रन्थतत्पृष्ठोल्लेखः | विशेषः |
|---|---|---|---|---|
| ३८ | १ | गणपतेर्दमनकारोपणम् | स्मृ. कौ. पृ. ९. | |
| ३९ | २ | आश्रमव्रतम् | च चिं. पृ. ५०५. | |
| ४० | ३ | चतुर्मूर्तिव्रतम् | च. चिं. पृ. ५०७. | |
| ४१ | ४ | गणेशपूजा | पु. चिं. पृ. ९१, आ. ज्यो. पृ. ३२२. | गणेशचतुर्थी । |

| क्रमाङ्कः | व्रताङ्कः | व्रतादिनामानि | प्रमाणग्रन्थतत्पृष्ठोल्लेखः | विशेषः |
|---|---|---|---|---|
| | | | **५ पञ्चमी** | |
| ४२ | १ | श्रीपञ्चमी | स्मृ. कौ. पृ. ९, | लक्ष्मीपूजा । |
| | | | आ. ज्यो. पृ. ३२२, | श्रीव्रतमिति नामान्तरम् । |
| | | | नी. पु. पृ. ६२, | |
| | | | पु. चिं. पृ. ९८, | |
| | | | च. चिं. पृ. ५७५. | |
| ४३ | २ | श्रीव्रतम् | च. चिं. पृ. ४६६–४६८. | वार्षिकमिदम्, अत्रारम्भः । |
| ४४ | ३ | हयपूजा | स्मृ. कौ. पृ. १०, | शालिहोत्रहयपञ्चमीव्रतम् । |
| | | | च. चिं. पृ. ५७३. | |
| ४५ | ४ | नागपूजा | स्मृ. कौ. पृ. १०, | |
| | | | पु. चिं. पृ. ९८. | |
| ४६ | ५ | पञ्चमहाभूतव्रतम् | च. चिं. पृ. ५५२–५५३. | वार्षिकम् । |

| क्रमाङ्कः | व्रताङ्कः | व्रतादिनामानि | प्रमाणग्रन्थतत्पृष्ठोल्लेखः | विशेषः |
|---|---|---|---|---|
| ४७ | ६ | संवत्सरव्रतम् अथवा पञ्चमूर्तिव्रतम् | च. चिं. पृ. ४१९–४२०. | वर्षं यावत्, अत्रारम्भः । |
| ४८ | ७ | कल्पादिः | आ. ज्यो. पृ. ३२२. | |
| ४९ | ८ | पञ्चमूर्तिव्रतम् | च. चिं. पृ. ४६८–४६९. | अत्रारम्भः, पञ्चदिनात्मकं वर्षं यावत्, पूर्वस्माद्भिन्नम् । |

## ६ षष्ठी

| क्रमाङ्कः | व्रताङ्कः | व्रतादिनामानि | प्रमाणग्रन्थतत्पृष्ठोल्लेखः | विशेषः |
|---|---|---|---|---|
| ५० | १ | स्कन्दोत्पत्तिर्दमनकेन तत्पूजनं च | स्मृ. कौ. पृ. १०–११, ति. त. पृ. ३५, पु. चिं. पृ. १०१, नी. पु. पृ. ६३. | स्कन्दपूजा, बालरक्षाकरी । |
| ५१ | २ | कुमारषष्ठीव्रतम् | च. चिं. पृ. ५८८–५९०. | वर्षं यावत् प्रतिमासम् । |
| ५२ | ३ | अशोकषष्ठी | आ. ज्यो. पृ. ३२२. | |

| क्रमाङ्कः | व्रताङ्कः | व्रतादिनामानि | प्रमाणग्रन्थतत्पृष्ठोल्लेखः | विशेषः |
|---|---|---|---|---|
| | | | ७ सप्तमी | |
| ५३ | १ | भास्करपूजा | स्मृ. कौ. पृ. ११, पु. चिं. पृ. १०४. | दमनकेन । |
| ५४ | २ | गोमयादिसप्तमीव्रतम् | च. चिं. पृ. ७२४–७२५. | वार्षिकं, प्रतिमासं भानुपूजा । |
| ५५ | ३ | नामसप्तमीव्रतम् | च. चिं. पृ. ७२६–७२८. | वार्षिकम् । |
| ५६ | ४ | सूर्यव्रतम् | च. चिं. पृ. ७७०–७७४. | |
| ५७ | ५ | मरुद्व्रतम् | च. चिं. पृ. ७७५–७७७. | |
| ५८ | ६ | तुरगसप्तमीव्रतम् | च. चिं. पृ. ७७७–७७८. | |
| ५९ | ७ | द्वादशसप्तमीव्रतम् | च. चिं. पृ. ७९३. | आरम्भोऽत्र, धातुः पूजा, भानु-पूजेति सर्वत्र लिखितं पुस्तकेषु । |
| ६० | ८ | वासन्तीपूजा | आ. ज्यो. पृ. ३२२. | |
| | | | ८ अष्टमी | |
| ६१ | १ | अशोककलिकाभक्षणम् | स्मृ. कौ. पृ. ११, | अशोकाष्टमी । |

| क्रमाङ्कः | व्रताङ्कः | व्रतादिनामानि | प्रमाणग्रन्थतत्पृष्ठोल्लेखः | विशेषः |
|---|---|---|---|---|
| | | | ति. त. पृ. ५८–५९, | योगविशेषे वैशिष्ट्यमपि । |
| | | | पु. चिं. पृ. १०९, | |
| | | | ग. प. पृ. ८९–९०, | |
| | | | च. चिं. पृ. ८६२–८६३, | |
| | | | आ. ज्यो. पृ. ३२२. | |
| ६२ | २ | भवानीयात्रा | स्मृ. कौ. पृ. ११–१२, | |
| | | | पु. चिं. पृ. १०९. | |
| ६३ | ३ | लौहित्ये स्नानम् | ति. त. पृ. ५८–५९, | ब्रह्मपुत्रे स्नानम् । |
| | | | ग. प. पृ. ८९–९०, | |
| | | | आ. ज्यो. पृ. ३२२, | |
| | | | कृ. स. पृ. ३. | |
| ६४ | ४ | वसुव्रतम् | च. चिं. पृ. ८४८–८४९. | |
| ६५ | ५ | अशोकयात्रा | ग. प. पृ. १९२. | भुवनेश्वरचतुर्दशयात्रासु हररथगतिः । |

| क्रमाङ्कः | व्रताङ्कः | व्रतादिनामानि | प्रमाणग्रन्थतत्पृष्ठोल्लेखः | विशेषः |
|---|---|---|---|---|
| ६६ | ६ | दुर्गाष्टमी | आ. ज्यो. पृ. ३२२. | |
| ६७ | ७ | नद्यां स्नानेन वाजपेयफलम् | ग. प. पृ. ६०९. | पुनर्वसुना बुधेन च सहिता चेदष्टमी। |

## ९ नवमी

| क्रमाङ्कः | व्रताङ्कः | व्रतादिनामानि | प्रमाणग्रन्थतत्पृष्ठोल्लेखः | विशेषः |
|---|---|---|---|---|
| ६८ | १ | रामनवमीव्रतम् | स्मृ. कौ. पृ. १२–१६,<br>ति. त. पृ. ५९–६२,<br>च. चिं. पृ. ९४१–९४६,<br>पु. चिं पृ. १३९–१४०,<br>ग. प. पृ. ११६–११९,<br>कृ. स. पृ. ३,<br>आ. ज्यो. पृ. ३२२. | |
| ६९ | २ | नवरात्रसमाप्तिः देवीपूजासहिता | स्मृ. कौ. पृ. १८. | |

| क्रमाङ्कः | व्रताङ्कः | व्रतादिनामानि | प्रमाणग्रन्थतत्पृष्ठोल्लेखः | विशेषः |
|---|---|---|---|---|
| ७० | ३ | दुर्गानवमीव्रतम् | पु. चिं. पृ. १४०. | |
| ७१ | ४ | भद्रकालीनवमी | नी. पु. पृ. ६३. | |
| | | **१० दशमी** | | |
| ७२ | १ | रामनवमीव्रताङ्गहोमः | स्मृ. कौ. पृ. १५–१८. | |
| ७३ | २ | धर्मराजपूजा दमनकेन | स्मृ. कौ. पृ. १८. | |
| | | **११ एकादशी** | | |
| ७४ | १ | ऋषिपूजा दमनकेन | स्मृ. कौ. पृ. १८. | |
| ७५ | २ | श्रीकृष्णदोलोत्सवः | स्मृ. कौ. पृ. १८–१९. | |
| ७६ | ३ | अवैधव्यशुक्लैकादशी-व्रतम् | च. चिं. पृ. ११५१. | छन्दोदेवपूजात्र । |
| ७७ | ४ | कामदैकादशी | आ. ज्यो. पृ. ३२२. | |
| ७८ | ५ | वास्तुपूजा | नी. पु. पृ. ६३. | |

| क्रमाङ्कः | व्रताङ्कः | व्रतादिनामानि | प्रमाणग्रन्थतत्पृष्ठोल्लेखः | विशेषः |
|---|---|---|---|---|
| | | **१२ द्वादशी** | | |
| ७९ | १ | विष्णोर्दमनोत्सवः | स्मृ. कौ. पृ. १९–२१. | |
| ८० | २ | मदनद्वादशीव्रतम् | च. चिं. पृ. ११९४–११९८. | |
| ८१ | ३ | भार्तृप्राप्तिव्रतम् | च. चिं. पृ. ११९८–१२००. | |
| ८२ | ४ | वासुदेवार्चनम् | नी. पु. पृ. ६३. | |
| | | **१३ त्रयोदशी** | | |
| ८३ | १ | ईश्वरपूजा दमनकेन | स्मृ. कौ. पृ. २१. | |
| ८४ | २ | मदनपूजा | स्मृ. कौ. पृ. २१, च.चिं. पृ. ८–९, ग. प. पृ.१५२–१५३, नी. पु. पृ. ६३–६४, आ. ज्यो. पृ. ३२२. | अनङ्गव्रतम्, कामदेवत्रयोदशी, मदनत्रयोदशी, इति नामान्तराणि। |

| क्रमाङ्कः | व्रताङ्कः | व्रतादिनामानि | प्रमाणग्रन्थतत्पृष्ठोल्लेखः | विशेषः |
|---|---|---|---|---|
| ८५ | ३ | दमनात्मकमदनपूजा | ति. त. पृ. १२०–१२१. | |
| ८६ | ४ | मदनमहोत्सवः | व. चिं. पृ. २१–२४. | |

## १४ चर्तुदशी

| | | | | |
|---|---|---|---|---|
| ८७ | १ | नृसिंहदोलोत्सवः | स्मृ. कौ. पृ. २१–२३. | |
| ८८ | २ | शिवे दमनकारोपः | स्मृ. कौ. पृ. २३,<br>पु. चिं. पृ. २३७. | |
| ८९ | ३ | शिवसन्निधौ गङ्गायां स्नानेन पिशाचत्व-निवृत्तिः | ति. त. पृ. १३३,<br>पु. चिं. पृ. २३७. | |
| ९० | ४ | मदनपूजोत्सवः | ति. त. पृ. १३३. | मदनचतुर्दशी, मदनभञ्जीत्याख्या। |

| क्रमाङ्कः | व्रताङ्कः | व्रतादिनामानि | प्रमाणग्रन्थतत्पृष्ठोल्लेखः | विशेषः |
|---|---|---|---|---|
| ९१ | ५ | दमनकचतुर्दशी | ग. प. पृ. १५४–१५५, | दमनभञ्जिका । |
| | | | आ. ज्यो. पृ. ३२२, | |
| | | | ग. प. पृ. १९०, | पुरुषोत्तक्षेत्रद्वादशयात्रासु । |
| | | | ग. प. पृ. १९२. | भुवनेश्वरचतुर्दशयात्रासु । |
| ९२ | ६ | महोत्सवव्रतम् | च. चिं. पृ. १४८–१४९. | प्रतिवर्षङ्कार्यम् । |
| ९३ | ७ | पवित्ररोपणम् | ग. प. पृ. १९३. | भुवनेश्वरचतुर्दशयात्रासु । |
| | | | **१५ पूर्णिमा** | |
| ९४ | १ | सर्वदेवार्चनं दमनकेन | स्मृ. कौ. पृ. २३, पु. चिं. पृ. २८४. | विशेषतः शिवस्य । |
| ९५ | २ | वैशाखस्नानारम्भः | स्मृ कौ. पृ. २३. | |
| ९६ | ३ | पाशुपतव्रतम् मलव्यपोहनम् | च. चिं. पृ. १९७–२१२. | आरम्भोऽत्र, वर्षं यावत् प्रतिमासं विधिः । |
| ९७ | ४ | पाशुपतव्रतम् | च. चिं. पृ. २१२–२२२. | मासं यावत् । |

| क्रमाङ्कः | व्रताङ्कः | व्रतादिनामानि | प्रमाणग्रन्थतत्पृष्ठोल्लेखः | विशेषः |
|---|---|---|---|---|
| ९८ | ५ | स्नानदानाभ्यां दशगुणं फलम् | ग. प. पृ. १६९. | पौर्णमासीयं चित्राभयुता चेत् । |
| ९९ | ६ | निकुम्भपूजा | च. चिं. पृ. २४१-२४२, नी. पु. पृ. ६४. | तदाख्यराक्षसोपद्रवशान्त्यर्थम् । निकुम्बपिशाचप्रयाणम् । |
| १०० | ७ | हरामञ्जरीपूजा | नी पु. पृ. ६५-६६. | |
| १०१ | ८ | महाचैत्री* | ग. प. पृ. ५९९, पु. चिं. पृ. ३१३-३१४. | शालिग्रामतीर्थे विशिष्टफलदा । |

* यस्यां पौर्णमास्यां गुरुचन्द्रावेकराशिगतौ भवतः सा महत्पदपूर्वा भवति—यथा महाचैत्रीत्यादि । तत्र तीर्थविशेषे फलाधिक्यम् ।

# चैत्रमासः ( वैशाखः* )

## कृष्णपक्षः

### प्रतिपत्

| क्रमाङ्कः | व्रताङ्कः | व्रतादिनामानि | प्रमाणग्रन्थतत्पृष्ठोल्लेखः | विशेषः |
|---|---|---|---|---|
| १०२ | १ | पातालव्रतम् | च. चिं. पृ. ५०६–५०७. | अत्रारम्भः |
| १०३ | २ | ज्ञानावाप्तिव्रतम् | च. चिं. पृ. ७४९–७५०. | " वैशाख पूर्णिमां यावन्मासव्रतम्। |

### २ द्वितीया

×

### ३ तृतीया

×

---

* अमान्तमानेन व्यवस्थापनादेव चैत्रकृष्णपक्षः, पूर्णिमान्तमानेन तु वैशाखकृष्णपक्ष इति निर्दिष्टमुपरिष्टादुभयमपीति समाकलनीयं सुधीभिः ।

| क्रमाङ्कः | व्रताङ्कः | व्रतादिनामानि | प्रमाणग्रन्थतत्पृष्ठोल्लेखः | विशेषः |
|---|---|---|---|---|
| | | | ४ चतुर्थी | |
| | | | × | |
| | | | ५ पञ्चमी | |
| | | | × | |
| | | | ६ षष्ठी | |
| १०४ | १ | स्कन्दषष्ठी | ग. प. पृ. ८४. | |
| | | | ७ सप्तमी | |
| | | | × | |
| | | | ८ अष्टमी | |
| १०५ | १ | कृष्णपूजा | स्मृ. कौ. पृ. २३–२४. | |
| १०६ | २ | अष्टकाश्राद्धम् | स्मृ. कौ. पृ. ३३८–३४२, ग. प. पृ. ४४६–४२१. | अनित्यम् । |

| क्रमाङ्कः | व्रताङ्कः | व्रतादिनामानि | प्रमाणग्रन्थतत्पृष्ठोल्लेखः | विशेषः |
|---|---|---|---|---|
| १०७ | ३ | कालाष्टमी | आ. ज्यो. पृ. ३२२. | |
| १०८ | ४ | सन्तानाष्टमीव्रतम् | च. चिं. पृ. ८४६—८४७. | वर्षं यावत् प्रतिमासं कृष्णपूजा। |
| १०९ | ५ | मङ्गलाव्रतम् | च. चिं पृ. ३३२—३३५. | |

## ९ नवमी

×

## १० दशमी

×

## ११ एकादशी

| | | | | |
|---|---|---|---|---|
| ११० | १ | वरूथिन्येकादशी | आ. ज्यो. पृ. ३२२. | |

## १२ द्वादशी

×

| क्रमाङ्कः | व्रताङ्कः | व्रतादिनामानि | प्रमाणग्रन्थतत्पृष्ठोल्लेखः | विशेषः |
| --- | --- | --- | --- | --- |
| | | | १३ त्रयोदशी<br>×<br>१४ चतुर्दशी | |
| १११ | १ | गङ्गास्नानेन पिशाचत्वनिवृत्तिः | स्मृ. कौ. पृ. २४,<br>ग. प. पृ. १६७–१६८,<br>ति. त. पृ. १३३. | भौमयुता चेदियमिति विशेषः। |
| ११२ | ५ | शिवरात्रिः | आ. ज्यो. पृ. ३२२. | |
| ११३ | ३ | कठिन्यादिभिः शुक्ली॰ कृते घटे रक्तपताकायुतां स्नुहीशाखां स्थापयित्वा गृहोपरि तत्स्थापनम् | ति. त. पृ. १३३,<br>ग. प. पृ. १६८. | |

| क्रमाङ्कः | व्रताङ्कः | व्रतादिनामानि | प्रमाणग्रन्थतत्पृष्ठोल्लेखः | विशेषः |
|---|---|---|---|---|
| | | | **३० आमावास्या** | |
| ११४ | १ | वह्निव्रतम् | स्मृ. कौ. पृ. २४–२५,<br>च. चिं. पृ. २५५–२५६. | आरम्भोऽत्र । |
| ११५ | २ | पितृव्रतम् | च. चिं. पृ. २५८. | वर्षयावत् । |



| क्रमाङ्कः | व्रताङ्कः | व्रतादिनामानि | प्रमाणग्रन्थतत्पृष्ठोल्लेखः | विशेषः |
|---|---|---|---|---|

## चैत्रमासः ( परिशिष्टम् १ )

| | | | | |
|---|---|---|---|---|
| ११६ | १ | आन्दोलनविधिः | च. चिं. पृ. ७४५–७४८. | |
| ११७ | २ | एकभक्तव्रतम् | च. चिं. पृ. ७४८. | |
| ११८ | ३ | शिवव्रतम् | च. चिं. पृ. ८१९–८२१ | सोपस्करं गृहदानमप्यत्रोक्तम् । |
| ११९ | ४ | चैत्रमासकृत्यम् | पु. चिं. पृ. ५–६, ग. प. पृ. १३–१५. | |
| १२० | ५ | घटात्मकघण्टाकर्ण-पूजा | ति. त. पृ. १४९. | घटदानं, मसूरनिम्बपत्रभक्षणं, पितुरुद्देशेन सक्तुघटादिदानं च। |
| १२१ | ६ | वस्तत्रिरात्रव्रतम् | च. चिं. पृ. ३२३. | |

| क्रमाङ्कः | व्रताङ्कः | व्रतादिनामानि | प्रमाणग्रन्थतत्पृष्ठोल्लेखः | विशेषः |
|---|---|---|---|---|
| | | **चैत्रमासः ( परिशिष्टम् २ )** | | |
| | | **कृष्णपक्षः** | | |
| | | **× तिथिः** | | |
| १२२ | १ | नवान्नभक्षणनिषेधः | ति. त. पृ.१५२. | |
| | | **चैत्रमासः ( परिशिष्टम ३ )** | | |
| | | **× पक्षः** | | |
| | | **१ प्रतिपत्** | | |
| १२३ | १ | तिलस्पर्शोत्तरं स्नानादि | च. चिं. पृ. ३५०. | |
| १२४ | २ | चैत्रप्रतिपत्कृत्यम् | च. चिं. पृ. ३५०–३५१. | |

| क्रमाङ्कः | व्रताङ्कः | व्रतादिनामानि | प्रमाणग्रन्थतत्पृष्ठोल्लेखः | विशेषः |
|---|---|---|---|---|
| | | | ३ तृतीया | |
| १२५ | १ | महातृतीयाव्रतम् | च. चिं. पृ. ४८४. | |
| | | | ९ नवमी | |
| १२६ | १ | वर्षव्रतम् | च. चिं. पृ. ९५९. | |
| | | | १२ द्वादशी | |
| १२७ | १ | वामनद्वादशीव्रतम् | च. चिं. पृ. १०३०-१०३२. | |



# वैशाखमासः

## शुक्लपक्षः

| क्रमाङ्कः | व्रताङ्कः | व्रतादिनामानि | प्रमाणग्रन्थतत्पृष्ठोल्लेखः | विशेषः |
|---|---|---|---|---|
| | | | १ प्रतिपत् | |
| | | | × | |
| | | | २ द्वितीया | |
| | | | × | |
| | | | ३ तृतीया | |
| १२८ | १ | विष्णुपूजा | स्मृ. कौ. पृ. २६–२७, ति. त. पृ. ३१, पु. चिं. पृ. ८५. | |

| क्रमाङ्कः | व्रताङ्कः | व्रतादिनामानि | प्रमाणग्रन्थतत्पृष्ठोल्लेखः | विशेषः |
|---|---|---|---|---|
| १२९ | २ (A) | युगादिः | स्मृ. कौ. पृ. २७–२८, | ब्राह्मे तु इयं कृत्यादिः । |
| | | | ति. त. पृ. १८७, | |
| | | | पु. चिं. पृ. ८६–८९, | |
| | | | ग. प. पृ. ४५१–४५३, | |
| | | | कृ. स. पृ. ४, | |
| | | | आ. ज्यो. पृ. ३२२, | महायुगादिः । |
| | | | च. चिं. पृ. ५१८, | |
| | | | च. चिं पृ. ५१४–५१७. | अत्र श्राद्धम् । |
| | (B) | युगादिः | ति. त. पृ. ३१, | यवैर्होमो, विष्णुपूजा, दानं ब्राह्मणेभ्यः, भक्षणं; शिवगङ्गाकैलासहिमालयभगीरथपूजा, स्नानदानतपःश्राद्धहोमादिकं च । |
| | | | ग. प. पृ. ७१, | |
| | | | कृ. स. पृ. ४, | |
| | | | नी. पु. पृ. ६६. | |

| क्रमाङ्कः | व्रताङ्कः | व्रतादिनामानि | प्रमाणग्रन्थतत्पृष्ठोल्लेखः | विशेषः |
|---|---|---|---|---|
| | | (C) युगादिः | च. चिं. पृ. ४००, | |
| | | | पु. चिं. पृ. ८५, | |
| | | | ग. प. पृ. ७०–७१. | |
| १३० | ३ | परशुरामजयन्ती | स्मृ. कौ. पृ. २८–२९, | |
| | | | पु. चिं. पृ. ८९, | |
| | | | आ. ज्यो. पृ. ३२२. | |
| १३१ | ४ | अक्षय्यतृतीया | स्मृ. कौ पृ. २८, | एतन्निमित्तमुदकुम्भदानम्। |
| | | | ति. त. पृ. ३१, | |
| | | | च. चिं. पृ. ४००–४०२, | |
| | | | च. चिं. पृ. ४९९, | |
| | | | पु. चिं. पृ. ८५–८६, | |
| | | | ग. प. पृ. ६९–७०, | |
| | | | ग. प. पृ. १९०, | पुरुषोत्तमद्वादशयात्रासु । |
| | | | ग. प. पृ. १९२. | भुवनेश्वरचतुर्दशयात्रासु । |

| क्रमाङ्कः | व्रताङ्कः | व्रतादिनामानि | प्रमाणग्रन्थतत्पृष्ठोल्लेखः | विशेषः |
|---|---|---|---|---|
| १३२ | ५ | गङ्गायां स्नानम् | क्ष. सं. पृ. ५. | |
| १३३ | ६ | कौशिक्यां स्नानम् | क्ष. स. पृ. ५. | |
| १३४ | ७ | अनन्ततृतीयाव्रतम् | च. चिं. पृ. ४२२–४२६. | आरम्भोऽत्र वार्षिकम् । |
| १३५ | ८ | कल्पादिः | आ. ज्यो. पृ. ३२२. | |
| १३६ | ९ | जगन्नाथस्य चन्दन-यात्रा | आ. ज्यो. पृ. ३२२. | तदारम्भोऽत्र । |
| १३७ | १० | महाफलव्रतम् | च. चिं. पृ. ३९२–३९४. | पाक्षिकम् , सूर्यसालोक्यप्राप्तिः फलम् । |

## ४ चतुर्थी

| | | | | |
|---|---|---|---|---|
| १३८ | १ | गणेशचतुर्थी | आ. ज्यो. पृ. ३२२. | |

## ५ पञ्चमी

+

| क्रमाङ्कः | व्रताङ्कः | व्रतादिनामानि | प्रमाणग्रन्थतत्पृष्ठोल्लेखः | विशेषः |
|---|---|---|---|---|
| | | | ६ षष्ठी | |
| | | | + | |
| | | | ७ सप्तमी | |
| १३९ | १ | गङ्गासप्तमी | स्मृ. कौ. पृ. २९, | |
| | | | आ. ज्यो. पृ. ३२२. | |
| १४० | २ | शर्करासप्तमीव्रतम् | स्मृ. कौ. पृ. २९–३०, | |
| | | | च. चिं पृ. ६४२–६४३. | |
| १४१ | ३ | निम्बसप्तमीव्रतम् | च. चिं. पृ. ६९७–७०१. | |
| १४२ | ४ | अनोदनासप्तमीव्रतम् | च. चिं. पृ. ७०२–७०५. | |
| १४३ | ५ | द्वादशसप्तमीव्रतम् | च. चिं. पृ. ७९३. | पर्जन्यपूजा । |

